॥ महाषोडशीवर्णरत्नावलिस्तोत्रम् ॥

ह्रींकाराङ्कणदीपिकां श्रितजनानन्दप्रदां श्रीमतीं
श्रीनाथाद्यमरार्चितङ्घ्रिकमलां श्रीसुन्दरीं भावये ।
श्रीमन्मञ्जुलरत्नसानुविलसन्मध्यस्थकूटाग्रग-
श्रीमन्नागरमध्यलासिसुमहच्छ्रीचक्रबिन्दौ स्थिताम् ॥ १॥

ह्रींकारामृतसिन्धुकौस्तुभमणिं ह्रींकारमध्यस्थितां
ह्रींकारोन्नतरत्नसौधवलभीसंलासिपारावतीम् ।
ह्रींकारमरपादपाग्रविहरत्संहृष्टकेकीं भजे
ह्रींकाराम्बुदचञ्चलां हृदि गतां ह्रींकारवर्णात्मिकाम् ॥ २॥

क्लींकाराम्बुजपत्रभास्करनिभां क्लींकारचन्द्रप्रभां
क्लींकाराग्निशिखां भजामि सततं क्लींकारपेटीमणिम् ।
क्लींकारोपवनान्यपुष्टगृहिणीं क्लींकारवेद्यात्मिकां
क्लींकाराब्जहरप्रियां परतरां क्लींकारवर्णात्मिकाम् ॥ ३॥

ऐं ऐमित्यनुचिन्तकाच्छहृदयाम्भोजाटवीहंसिकां
ईशित्वादिविभूतिसंवृतमहारत्नासने संस्थिता ।
ऐश्वर्याय भवत्वखण्डविभवा याम्बा सदा मे गृहे
चेशाद्यर्चितपादपङ्कजयुगा चैशाङ्कमञ्चस्थिता ॥ ४॥

सौन्दर्यद्रुममञ्जरी भगवती सौवर्णवर्णावता-
न्मां संसारमहाभयाद् द्रुततरं सौवर्नकुम्भस्तनी ।
सूर्याब्जारिकृशानुदृक् शशिकलोत्तंसा सदानन्ददा
सौभाग्यं दिशतादथ प्रथितमप्यव्याहतं भूरि मे ॥ ५॥

ओङ्कारार्थनिरूपणैकमनसा चोंकारनादात्मना
श्रीदेव्या मम चित्तभित्तिरधुना चित्रायते चोज्ज्वला ।
ओजोभिर्जगदेतदद्य विपुलं यस्यास्तयाब्जप्रभै-
रोतप्रोतमभूत् कुसुम्भकुरुविन्दाब्जप्रभायाः सदा ॥ ६॥

ह्रींकारागममस्तकं हृदि कदा भायाद् वपुस्ते परं
ह्रींकाराब्धिसुधामयं हृतजपाशोणं हितप्रापकम् ।
ह्रींकाराद्रिगुहाहरीन्द्रशिशुकं ह्रींकारकन्दाङ्कुरं
ह्रींकाराम्बुजसौरभं हृतजगज्जालं जगन्नायिके ॥ ७॥

ह्रींकाराध्वरदक्षिणे जननि ते पादाब्जयुग्मे सदा

भक्तिं मे जनयाशु देवि कृपया श्रीदेवि तारायिते ।
श्रीमन्मञ्जुलरत्ननिर्मितमहामञ्जीरभूषोज्ज्वले
श्रीशृङ्गाररसालये श्रितजगत्स्वान्ताब्जिनीहंसिके ॥ ८॥

कल्याण वितनोतु काममनिशं कामारिवामाङ्कगा
कस्तूरीघनसाररूषितकुचाग्रालम्बिमुक्तालता ।
कामाकर्षणदिव्यपाशसुभगा कान्त्यार्ककोटिप्रभा
कल्याणी कमलेक्षणा कलिमलप्रध्वंसिनी कामदा ॥ ९॥

एतावन्मम देवि ते पदयुगे भक्तिर्दृढा भूयसी
स्यान्नेत्रे च जपाप्रसूनरुचिरायास्त्वत्तनोर्वीक्षणे ।
आनन्दाश्रुपरिप्लुते वचनमप्यम्ब स्तवे गद्गदं
चेतस्त्वन्मयमम्ब पश्यतु जगत् त्वन्मूर्तिभासारुणम् ॥ १०॥

ईशानादिपदाञ्चिते शिवमये मञ्चे परेशाङ्कगा-
मीशित्वाद्यखिलाष्टभूतिमनिशं दात्रीं स्वभक्ताय मे ।
चापं चैक्षवमाशुगं सुममयं क्रोधात्मकं चाङ्कुशं
पाशं रागतनुं प्रणौमि दधतीं श्रीमन्महासुन्दरीम् ॥ ११॥

लक्ष्मीं चक्रनिवासिनीं ललितसंगीतप्रियां लाकिनीं
लब्धैश्वर्यसमुन्नतिं लयकरीं लास्यप्रियामाश्रये ।
लङ्कानायकवैरिपूजितपदां लावण्यवारांनिधिं
लक्ष्मीपूजितपादपद्मयुगलां मोक्षाख्यलक्ष्म्यै सदा ॥ १२॥

ह्रींकारार्णसुधां च हृद्यममरैरीड्यं महत् ते वपुः
प्रालेयांशुकलाविलासिमकुटं ह्रींकारनादात्मकम् ।
ये ध्यायन्ति हृदम्बुजे प्रतिदिनं तेषामनङ्गज्वर-
क्लान्ताः स्युर्वशमागतास्त्वनुकलं वध्वः सुराणां प्रियाः ॥ १३॥

हन्तास्थां मितवैभवेषु हरिमुख्येष्वेव मूढा जना
भक्तिं पामरदैवतेषु विवशाः कुर्वन्ति मोहादिह ।
त्यक्त्वा त्वां परदेवतां हरिहरब्रह्मादिभिः सेवितां
सर्वैश्वर्यमहोदयां खरमिमे संत्यज्य धेनुं श्रिताः ॥ १४॥

सर्वज्ञत्वमवाप्य संसदि सतां शास्त्रेषु पाण्डित्यम-
प्यम्बायाः पदपद्मसंस्मृतिवशान्मूकोऽपि वाग्मी भवेत् ।
यस्यास्तच्चरणाम्बुजं हरिहरब्रह्मादिभिर्वन्दितं
मूढाश्चिन्तयताशु वोऽपि तरसा दद्यात् कवित्वं श्रियः ॥ १५॥

कल्याण्यम्ब कदम्बकाननगृहे कल्पद्रुमैः काङ्क्षिता-
दर्थादर्थसमर्पणेऽधिकतरे कारुण्यकल्लोलिभिः ।
कर्णान्तायतलोचनाञ्चलगतैर्वीक्ष्याद्य मामातुरं
रक्षासु त्रिपुरे परात्परतरे श्रीकामसंजीविनि ॥ १६॥

हस्त्युत्तुङ्गपृथूरुकुम्भकुचयोर्विन्यस्तहारेण ता-
मारक्तांशुकमाल्यभूषणवरैरुद्दीप्यमानामुमाम् ।
हाहाहूहुमुखस्तुतामनुदिनं हैयगवीनान्तरा-
मम्बामादिमवाक्स्तुतामहमलं ध्यायाम्यभीष्टाप्तये ॥ १७॥

लब्धज्ञानसुधाकरेण मनसा लक्ष्यीकृतं ते वपुः
सद्भिः संततमम्बुजाक्षि ललिते लग्नं भवत्वान्तरे ।
लावण्योज्ज्वलदिव्यगात्रि विमले लाक्षारसालंकृतं
श्रीमत्पादपयोजयुग्ममधुना मन्मूर्ध्नि निक्षिप्यताम् ॥ १८॥

ह्रींकाराब्धिसुधे ह्रिया विरहिते ह्रींकारमन्त्रार्थदे
ह्रींकारप्रियशारिके मयि कृपां ह्रींकारनादोदये ।
ह्रींकारमलदर्पणप्रतिकृते ह्रींकारवेद्ये शिवे
दीने मय्यधुना कुरुष्व दयया ह्रींकारदीपप्रभे ॥ १९॥

संपत्कर्मणि दीक्षितानि सकलापद्भञ्जनान्यम्ब ते
मामेवाकलयन्तु पङ्कजदलाक्षेमंकराण्यादरात् ।
ब्रह्मादीन् पदपद्मलग्नमकुटान् हित्वा कथंचिच्छिवे
नेत्राण्यद्य कृपासुधारसझरीसिक्तानि हे सुन्दरि ॥ २०॥

कल्पान्ते हृत्सर्वलोकजठरस्यानन्दनाट्यं मुदा
कर्तुर्यन्मणिकुण्डलीयुगलिका दीपायते संततम् ।
ब्रह्मोपेन्द्रमुखामरे विरमति ब्रह्माण्डभाण्डे परं
सा पाशाङ्कुशपुष्पसायकधनुर्विद्योतताम्मे हृदि ॥ २१॥

लक्ष्यं किंच भवेन्महात्रिपुरसुन्दर्यागमान्तैर्नुते
मां लक्ष्यीकुरु वीक्षणाशुगततेस्त्वामेव सर्वात्मना ।
ध्यात्वा चेतसि संस्थितं जगदिदं त्वद्रूपमार्ये सदा
ज्ञात्वानन्यहृदा विहाय भजनं नश्यत्सु देवेष्विह ॥ २२॥

ह्रींकारस्मरणेन देवि तरसा ह्रीमान् सुधीमान् भवेत्
ते मूकोऽपि जडोऽपि पद्मजनुषा सापत्निकोऽभूद् भृशम् ।

आश्लिष्याम्बुधिकन्यकां विलसति श्रीमन्त्रराजाक्षरं
तन्मय्यादिश देवदेवि कृपया धन्योऽस्म्यहं तेन च ॥ २३॥

सौवर्णोज्ज्वलमण्डपे मरतकप्राकारभित्तौ बृह-
न्नानारत्नमयासने शिवमये श्रीकामराजाङ्कके ।
तिष्ठन्तीं कुरुविन्दबृन्दरुचिरां माणिक्यभूषोज्ज्वलां
धन्यास्ते भुवि चिन्तयन्ति मनसा ये श्रीमहासुन्दरीम् ॥ २४॥

ऐंकाराम्बुजकर्णिकोज्ज्वलमहद्रत्नासने संस्थितां
सिञ्चन्तीममृतद्रवैः शशिशिलास्पष्टाभिरामप्रभाम् ।
तेजोभिर्जगदम्ब ये भुवि भजन्त्यापीनतुङ्गस्तनीं
तेषामाननपङ्कजे निवसते वाणी सुधास्यन्दिनी ॥ २५॥

क्लीमित्यक्षरमेकमेव मनसा ध्यायन्ति ये मानवाः
कंदर्पायुततुल्यसुन्दरतरश्रीमूर्तयः शैथिलम् ।
कुर्वन्ति स्म रतेश्च नैजवपुषा ते पातिव्रत्यं सह
स्पर्धन्ते हृतवाग्रमाः कमलनाभाब्जासनाभ्यां सदा ॥ २६॥

ह्रींकारीं हृदयाम्बुजेऽहमधुना ह्रींकारसौधे शुभे
ह्रींकारोन्नतरत्नमञ्चफलके ह्रींकारशोणाम्बुजे ।
ह्रींकाराक्षरमुच्चरद्भगवतीमारोप्य शोणप्रभां
ह्रींकाराम्बुजवारिगन्धफलताम्बूलादिभिस्तोषये ॥ २७॥

ह्रींकारामृतपादमञ्जुलमणीवेद्यन्तरे भासुरां
श्रीदेवीं श्रितसर्वलोकसकलाभीष्टप्रदानोत्सुकाम् ।
श्रीश्रीमत्तनुमुद्यदर्ककिरणां श्रीशांभवीं श्रीकरी-
मात्मन्यैक्यमुपास्महे परतरां निर्वाणसंसिद्धये ॥ २८॥

इति श्रीमहाषोडशीवर्णरत्नावलिस्तोत्रं संपूर्णम्